# चम्पूरामायणे

# बालकाण्डम्

२१ – ३०.०४.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# पुनरावर्तनम्

- पीठिका – मङ्गलाचरणम्, चम्पूस्वरूपम्, काव्यवस्तु
- क्रौञ्चवधप्रसङ्गः
- ब्रह्मणः आदेशेन वाल्मीकिना रामायणस्य रचना
- लवकुशाभ्यां रामायणस्य अध्ययनं गानञ्च
- श्रीरामस्य आस्थाने रामायणगानस्य आरम्भः

# पुनरावर्तनम्

- अयोध्यायाः, दशरथस्य च वर्णनम्
- पुत्रार्थं तप्यमानेन दशरथेन अश्वमेध-पुत्रकामेष्ट्योः विधानम्
- देवैः नारायणस्य दर्शनम्, रावणस्य दौर्जन्यवर्णनम्
- अवतरीतुं विष्णोः निर्धारः, वानरादिषु रूपेषु देवनामवतारः
- पायसप्रदानं विभागश्च

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# पुनरावर्तनम्

- गर्भवत्याःकौसल्यायाः वर्णनम्
- श्रीरामस्य, तद्भ्रातॄणां च जननम्
- विश्वामित्रस्यागमनम्, श्रीरामं प्रेषयितुम् अभ्यर्थना
- वसिष्ठादेशेन दशरथस्याङ्गीकारः, रामलक्ष्मणयोः प्रेषणम्
- बला-अतिबलयोः उपदेशः, अङ्गदेशदर्शनम्

तदनु मानससरःप्रसृतां सरयूमतिक्रम्य वृत्रवधप्रवृद्धवृद्धश्रवःपङ्क-क्षालनलब्धमलयोर्मलदकरूषनाम्नोर्जनपदयोः सीम्नि कृतपदयोर्दाशरथ्योः पुनरप्येवमब्रवीत् ।

- तदनु, मानस-सरः-प्रसृताम्, सरयूम्, अतिक्रम्य, वृत्र-वध-प्रवृद्ध-वृद्धश्रवस्-पङ्क-क्षालन-लब्ध-मलयोः, मलद-करूष-नाम्नोः, जनपदयोः, सीम्नि, कृत-पदयोः, दाशरथ्योः, पुनः, अपि, एवम्, अब्रवीत् ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

# तदनु मानससरःप्रसृतां सरयूमतिक्रम्य ...

- तदनु = तदनन्तरम्, अङ्गदेशम् अतीत्य
- मानससरःप्रसृताम् = मानससरोवरात् प्रभवन्तीम्
- सरयूम् = सरयूनदीम्
- अतिक्रम्य = अतीत्य

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value ...

# वृत्रवधप्रवृद्धवृद्धश्रवःपङ्कक्षालनलब्धमलयोर्मलदकरूषनाम्नोर्जनपदयोः सीम्नि

- वृत्रवध... - वृत्रस्य = वृत्रासुरस्य, वधः = हननम्,
- वृत्रवधेन प्रवृद्धम् = समेधितम्, वृद्धश्रवसः = इन्द्रस्य, पङ्कम् = पापम्/ ब्रह्महत्यादोषः
- तस्य पापस्य क्षालनम् = मार्जनम्, तेन लब्ध-मलयोः = प्राप्त-कल्मषयोः
- मलद-करूष-नाम्नोः जनपदयोः = देशयोः
- सीम्नि = सीमप्रदेशे

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# कृतपदयोर्दाशरथ्योः पुनरप्येवमब्रवीत् ।

- कृतपदयोः = न्यस्तपादयोः
- दाशरथ्योः = रामलक्ष्मणयोः
- पुनरपि = भूयोऽपि
- एवम् = वक्ष्यमाणप्रकारेण
- अब्रवीत् = अवदत्

# तदनु मानससरःप्रसूतां सरयूमतिक्रम्य ...

- तात्पर्य्यम् – अङ्गदेशं दृष्ट्वा रामलक्ष्मणौ विश्वामित्रेण सह मानससरोवरात् प्रभवन्तीं सरयूनदीम् अतीत्य मलद-करूष-नामकयोः देशयोः सीमप्रदेशं प्राप्तवन्तौ । वृत्रासुरस्य वधेन ब्रह्महत्यादोषं प्राप्तः इन्द्रस्य अस्मिन् प्रदेशे पापनिवृत्तिः जाता । तस्य पापस्य सम्पर्कात् अनयोः देशयोः मलदः-करूषः इति नाम अभूत् । तं प्रदेशं प्रविश्य विश्वामित्रः भूयोऽपि रामलक्ष्मणौ उद्दिश्य अकथयत् ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# तदनु मानससरःप्रसृतां सरयूमतिक्रम्य ...

- मानससरःप्रसृताम् – मानसम् इति सरः, मानससरसः प्रसृता, ताम्
- वृत्रवधप्रवृद्धवृद्धश्रवःपङ्कक्षालनलब्धमलयोः – वृत्रस्य वधः, वृत्रवधेन प्रवृद्धम्, वृद्धश्रवसः पङ्कम्, वृत्रवधप्रवृद्धं वृद्धश्रवःपङ्कम्, वृत्र...पङ्कस्य क्षालनम्, वृत्र...क्षालनेन लब्धम्, वृत्र...लब्धं मलं ययोः तौ, तयोः। "वृद्धश्रवाः शुनासीरः पुरुहूतः पुरन्दरः", "अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम्"

# तदनु मानससरःप्रसृतां सरयूमतिक्रम्य ...

- मलदकरूषनाम्नोः – मलदश्च करूषश्च, मलदकरूषौ नामनी ययोः तौ, तयोः। नकारान्तः, पुं, ६।२
- सीम्नि – नकारान्तः, स्त्रीलिङ्गः, ७।१
- कृतपदयोः – कृतं पदं याभ्यां तौ, तयोः
- अब्रवीत् – "ब्रूञ् व्यक्तायां वाचि", लङ् प्रथम।१

Vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education

# यक्षः सुकेतुर्द्रुहिणप्रसादाल्लेभे सुतां कामपि ताटकाख्याम् ।
# सुन्दः किलैनां परिणीय तस्यां मारीचनीचं जनयाम्बभूव ॥ ३९ ॥

- यक्षः, सुकेतुः, द्रुहिण-प्रसादात्, लेभे, सुताम्, काम्, अपि, ताटका-आख्याम्, सुन्दः, किल, एनाम्, परिणीय, तस्याम्, मारीच-नीचम्, जनयाम्बभूव
- लेभे = प्राप
- कः लेभे ? यक्षः = गुह्यकः
- किंनामा यक्षः ? सुकेतुः

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education

# यक्षः सुकेतुर्द्रुहिणप्रसादाल्लेभे सुतां कामपि ताटकाख्याम् ।
# सुन्दः किलैनां परिणीय तस्यां मारीचनीचं जनयाम्बभूव ॥ ३९ ॥

- कां लेभे ? कामपि = काञ्चित्, सुताम् = पुत्रीम्
- कीदृशीं सुताम् ? ताटकाख्याम् = ताटकानाम्नीम्
- कथं लेभे ? द्रुहिणप्रसादात् = ब्रह्मणः वरात्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education

यक्षः सुकेतुर्द्रुहिणप्रसादाल्लेभे सुतां कामपि ताटकाख्याम् ।
सुन्दः किलैनां परिणीय तस्यां मारीचनीचं जनयाम्बभूव ॥ ३९ ॥

- जनयाम्बभूव = उत्पादितवान्, किल
- कः जनयाम्बभूव? सुन्दः = सुन्दनामा यक्षः
- किं कृत्वा जनयाम्बभूव ? एनाम् = ताटकाम्, परिणीय = विवाहं कृत्वा
- कस्यां जनयाम्बभूव ? तस्याम् = ताटकायाम्
- कं जनयाम्बभूव? मारीचनीचम् = क्षुद्रं मारीचम्

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education

# यक्षः सुकेतुर्द्रुहिणप्रसादाल्लेभे सुतां कामपि ताटकाख्याम् ।
# सुन्दः किलैनां परिणीय तस्यां मारीचनीचं जनयाम्बभूव ॥ ३९ ॥

- अन्वयः – सुकेतुः यक्षः द्रुहिणप्रसादात् ताटकाख्यां कामपि सुतां लेभे । सुन्दः एनां परिणीय तस्यां मारीचनीचं जनयाम्बभूव किल ।
- तात्पर्य्यम् – सुकेतुनामा यक्षः ब्रह्मणः वरेण ताटकानाम्नीं पुत्रीं प्राप्तवान् । सुन्दाख्यः यक्षः ताम् ऊढ्वा तस्यां मारीचनामकं क्षुद्रम् उत्पादितवान् ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education

# यक्षः सुकेतुर्द्रुहिणप्रसादाल्लेभे सुतां कामपि ताटकाख्याम् ।
# सुन्दः किलैनां परिणीय तस्यां मारीचनीचं जनयाम्बभूव ॥ ३९ ॥

- द्रुहिणप्रसादात् – द्रुहिणस्य प्रसादः, तस्मात् । "धाता-अब्जयोनिः द्रुहिणः विरिञ्चिः कमलासनः" (अमरः)
- प्रसादात् + लेभे = प्रसादाल्लेभे – परसवर्णसन्धिः ("तोर्लि" ८।४।६०)
- लेभे – "डुलभष् प्राप्तौ" लिट्, प्रथम।१
- परिणीय – परि + "णीञ् प्रापणे" - ल्यबन्ताव्ययम्

यक्षः सुकेतुर्द्रुहिणप्रसादाल्लेभे सुतां कामपि ताटकाख्याम् ।
सुन्दः किलैनां परिणीय तस्यां मारीचनीचं जनयाम्बभूव ॥ ३९ ॥

- मारीचनीचम् – मारीचश्चासौ नीचश्च
- जनयाम्बभूव – "जनी प्रादुर्भावे" + णिच् – लिट् प्रथम।१
- इन्द्रवज्रा वृत्तम्

Samskrtam ·Value Educ...

# एकदा सुन्दे निहते मारीचः कुम्भसम्भवमभिभूय तस्य शापादवाप कौणपताम् ।

- एकदा, सुन्दे, निहते, मारीचः, कुम्भ-सम्भवम्, अभिभूय, तस्य, शापात्, अवाप, कौणपताम् ।
- एकदा = कदाचित्
- सुन्दे निहते = अगस्त्यशापेन सुन्दे मृते सति
- अवाप = प्राप्तवान्

# एकदा सुन्दे निहते मारीचः कुम्भसम्भवमभिभूय तस्य शापादवाप कौणपताम् ।

- कः अवाप ? मारीचः = सुन्द-ताटकयोः पुत्रः
- किम् अवाप ? कौणपताम् = राक्षसत्वम्
- किंकृत्वा अवाप? कुम्भसम्भवम् = अगस्त्यम्, अभिभूय = आक्रम्य
- कस्मात् कारणात् अवाप ? तस्य = अगस्त्यस्य, शापात् = आक्रोशात्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Educ...

# एकदा सुन्दे निहते मारीचः कुम्भसम्भवमभिभूय तस्य शापादवाप कौणपताम् ।

- अन्वयः – एकदा सुन्दे निहते (सति) मारीचः कुम्भसम्भवम् अभिभूय तस्य शापात् कौणपताम् अवाप ।
- तात्पर्य्यम् – कदाचित् अगस्त्यमहर्षेः शापेन सुन्दः हतः । तदा कोपेन तत्पुत्रः मारीचः (ताटकया सह) अगस्त्यम् आक्रम्य तस्य शापात् राक्षसत्वं प्राप्तवान् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education

# एकदा सुन्दे निहते मारीचः कुम्भसम्भवमभिभूय तस्य शापादवाप कौणपताम् ।

- कुम्भसम्भवम् – "अगस्त्यः कुम्भसम्भवः" (अमरः) । कुम्भः सम्भवः यस्य सः, तम् ।
- अवाप – अव+"आप्लृ व्याप्तौ" – लिट्, प्रथम।१
- कौणपताम् – "राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः" (अमरः)। कौणपस्य भावः – कौणप+तल् (तद्धितः) । आकारान्तः, स्त्री, २।१

# ताटकाप्यभूत्पुरुषादिनी ।

- ताटका, अपि, अभूत्, पुरुष-आदिनी
- ताटका अपि
- पुरुषादिनी = मनुष्यभक्षिणी राक्षसी
- अभूत्

# ताटकाप्यभूत्पुरुषादिनी ।

- तात्पर्य्यम् – ताटकापि अगस्त्यशापेन मनुष्यभक्षिणी राक्षसी जाता ।
- पुरुषादिनी – पुरुषान् अत्तुं शीलम् अस्याः । पुरुष + अद् + णिनि (कृत्) । ईकारान्तः, स्त्री, १।१

## सेयमब्जासनसिद्धसिन्धुरसहस्रप्राणात्मजेन सह जनपदविपदं विदधाना व्यापादनीया त्वयेति ।

- सा, इयम्, अब्ज-आसन-सिद्ध-सिन्धुर-सहस्र-प्राणा, आत्मजेन, सह, जनपद-विपदम्, विदधाना, व्यापादनीया, त्वया, इति (अब्रवीत्)।
- व्यापादनीया = मारणीया
- केन व्यापादनीया ? त्वया = रामेण
- का व्यापादनीया ? सा इयम् = पूर्ववर्णिता ताटका

vyoma
॥ सा धेनुमुपासीत ॥
Samskrtam

# सेयमब्जासनसिद्धसिन्धुरसहस्रप्राणात्मजेन सह जनपदविपदं विदधाना व्यापादनीया त्वयेति ।

- कीदृशी इयम् ? अब्जासनसिद्धसिन्धुरसहस्रप्राणा – अब्जासनः = ब्रह्मा, तेन सिद्धम् = प्राप्तम्, सिन्धुरसहस्रस्य = सहस्रसङ्ख्याकानां गजानाम्, प्राणः = बलम् यस्याः तादृशी
- पुनः कीदृशी इयम् ? विदधाना = कुर्वाणा
- किं विदधाना ? जनपदविपदम् = देशे उपप्लवम्
- केन सह विदधाना ? आत्मजेन = पुत्रेण मारीचेन सह

Samskritam · Value Education

# सेयमब्जासनसिद्धसिन्धुरसहस्रप्राणात्मजेन सह जनपदविपदं विदधाना व्यापादनीया त्वयेति ।

- तात्पर्य्यम् – एषा ताटका ब्रह्मणः प्रसादेन सहस्रगजबलयुक्ता पुत्रेण मारीचेन सह देशे उपप्लवं जनयन्ती त्वया मारणीया (इति विश्वामित्रः रामम् अब्रवीत्)

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam · Value Education

# सेयमब्जासनसिद्धसिन्धुरसहस्रप्राणात्मजेन सह जनपदविपदं विदधाना व्यापादनीया त्वयेति ।

- अब्जासनसिद्धसिन्धुरसहस्रप्राणा – अब्जम् आसनं यस्य सः, अब्जासनेन सिद्धः । सिन्धुराणां सहस्रम् । सिन्धुरसहस्रस्य प्राणः । अब्जासनसिद्धः सिन्धुरसहस्रप्राणः यस्याः सा ।
- आत्मजेन – "आत्मजः तनयः सूनुः सुतः पुत्रः" (अमरः)
- जनपदविपदम् – जनपदस्य विपत्, ताम् । दकारान्तः, स्त्री, २।१

## सेयमब्जासनसिद्धसिन्धुरसहस्रप्राणात्मजेन सह जनपदविपदं विदधाना व्यापादनीया त्वयेति ।

- विदधाना – “डुधाञ् धारणपोषणयोः” – शानच् + टाप्
- व्यापादनीया – वि+आ+ “पद गतौ” + णिच् + अनीयर् + टाप्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# रामस्तमाकर्ण्य स्त्रीवधशङ्कामकरोत् ।

- रामः, तम्, आकर्ण्य, स्त्री-वध-शङ्काम्, अकरोत्
- रामः
- तम् = विश्वामित्रकथितं ताटकावृत्तान्तम्
- आकर्ण्य = श्रुत्वा
- स्त्रीवधशङ्काम् = नारीहननस्य शास्त्रनिषिद्धत्वात् संशयम्
- अकरोत् = कृतवान्

# रामस्तमाकर्ण्य स्त्रीवधशङ्कामकरोत् ।

- तात्पर्य्यम् – रामः विश्वामित्रकथनं श्रुत्वा शास्त्रनिषिद्धत्वात् नारीहननं कथं कर्तव्यमिति सन्देहं पृष्टवान् ।

- स्त्रीवधशङ्काम् – स्त्रियाः वधः, स्त्रीवधस्य शङ्का

किञ्च वैरोचनीं मन्थरां वसुन्धरापराधधुरन्धरां पुरन्दरेण निहतां जनार्दनकृतमर्दनां च भार्गवजननीं प्रदर्श्य दाशरथेरमन्दां सुन्दवधूवधविचिकित्सामुत्सारयामास ।

- किञ्च, वैरोचनीम्, मन्थराम्, वसुन्धरा-अपराध-धुरन्धराम्, पुरन्दरेण, निहताम्, जनार्दन-कृत-मर्दनाम्, च, भार्गव-जननीम्, प्रदर्श्य, दाशरथेः, अमन्दाम्, सुन्द-वधू-वध-विचिकित्साम्, उत्सारयामास

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

# किञ्च वैरोचनीं मन्थराम् ....

- उत्सारयामास = निवारितवान्
- [कः? विश्वामित्रः]
- काम् उत्सारयामास ? सुन्दवधूवधविचिकित्साम् = सुन्दपत्न्याः ताटकायाः मारणविषये संशयम्
- कीदृशीं सुन्दवधूवधविचिकित्साम् ? अमन्दाम् = अनल्पाम्
- कस्य सुन्दवधूवधविचिकित्साम् ? दाशरथेः = रामस्य

# किञ्च वैरोचनीं मन्थराम् ....

- किं कृत्वा उत्सारयामास ? प्रदर्श्य = दृष्टान्ततया निर्दिश्य
- किं प्रदर्श्य? (दृष्टान्तद्वयम्)
- वैरोचनीम् = विरोचनपुत्रीम् मन्थराम्, वसुन्धरापराधधुरन्धराम् = लोकपीडनतत्पराम्, पुरन्दरेण = इन्द्रेण, निहताम् = मारिताम्
- जनार्दनकृतमर्दनाम् = विष्णुना व्यापादिताम्, भार्गवजननीम् = शुक्रमातरम्

# किञ्च वैरोचनीं मन्थराम् ....

- तात्पर्य्यम् – विश्वामित्रः पूर्वकाले लोकपीडनतत्परां विरोचनपुत्रीं मन्थराम् इन्द्रेण मारिताम्, विष्णुना व्यापादितां शुक्रमातरं च दृष्टान्तत्वेन निर्दिश्य रामस्य ताटकवधविषयकं गभीरं सन्देहं निवारितवान् ।

# किञ्च वैरोचनीं मन्थराम् ....

- श्रूयते हि पुरा शक्रो विरोचनसुतां नृप । पृथिवीं हन्तुमिच्छन्तीं मन्थरामभ्यसूदयत् ॥
- विष्णुना च पुरा राम भृगुपत्नी पतिव्रता । अनिन्द्रं लोकमिच्छन्ती काव्यमाता निषूदिता ॥
- एतैश्चान्यैश्च बहुभी राजपुत्रैर्महात्मभिः । अधर्मसहिता नार्यो हताः पुरुषसत्तमैः ॥
  तस्मादेनां घृणां त्यक्त्वा जहि मच्छासनात् नृप ॥

(बाल० २५-२०-२२)

# किञ्च वैरोचनीं मन्थराम् ....

- वैरोचनीम् – विरोचनस्य अपत्यं स्त्री – विरोचन + अण् + ङीप्
- वसुन्धरापराधधुरन्धराम् – वसुन्धरायाः अपराधः, वसुन्धरापराधस्य धुरन्धरा
- पुरन्दरेण – "वृद्धश्रवाः शुनासीरः पुरुहूतः पुरन्दरः" (अमरः)
- जनार्दनकृतमर्दनाम् – जनार्दनेन कृतम्, जनार्दनकृतं मर्दनं यस्याः सा, ताम्

# किञ्च वैरोचनीं मन्थराम् ....

- भार्गवजनानीम् – भृगोरपत्यं भार्गवः, भार्गवस्य जननी, ताम्
- अमन्दाम् – न मन्दा, ताम्
- सुन्दवधूवधविचिकित्साम् – सुन्दस्य वधूः, सुन्दवध्वाः वधः, सुन्दवधूवधस्य विचिकित्सा । “विचिकित्सा तु संशयः” (अमरः)
- उत्सारयामास – उत् + सृ गतौ + णिच् – लिट्, प्रथम।१

आश्रुतः श्रुतवृत्तेन तेन सुन्दप्रियावधः ।
तमेवान्ववदत्तस्य चापः शिञ्जारवच्छलात् ॥ ४० ॥

- आश्रुतः, श्रुत-वृत्तेन, तेन, सुन्द-प्रिया-वधः, तम्, एव, अन्ववदत्, तस्य, चापः, शिञ्जा-रव-च्छलात्
- आश्रुतः = प्रतिज्ञातः
- कः आश्रुतः ? सुन्दप्रियावधः = ताटकायाः हननम्
- केन आश्रुतः ? तेन = रामेण
- कीदृशेन तेन ? श्रुतवृत्तेन = आकर्णित-पूर्ववृत्तान्तेन

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education

# आश्रुतः श्रुतवृत्तेन तेन सुन्दप्रियावधः ।
# तमेवान्ववदत्तस्य चापः शिञ्जारवच्छलात् ॥ ४० ॥

- अन्ववदत् = अनुसृत्य अब्रवीत्
- कः अन्ववदत्? तस्य = रामस्य, चापः = धनुः
- कम् अन्ववदत् ? तम् एव = रामम् एव
- कथम् अन्ववदत् ? शिञ्जारवच्छलात् = ज्याघोषव्याजेन

आश्रुतः श्रुतवृत्तेन तेन सुन्दप्रियावधः ।
तमेवान्ववदत्तस्य चापः शिञ्जारवच्छलात् ॥ ४० ॥

- अन्वयः – श्रुतवृत्तेन तेन सुन्दप्रियावधः आश्रुतः । तस्य चापः शिञ्जारवच्छलात् तम् एव अन्ववदत् ।
- तात्पर्य्यम् – विश्वामित्रकथितं पूर्ववृत्तान्तं श्रुत्वा रामः ताटकावधं प्रतिज्ञातवान् । तस्य धनुरपि ज्याघोषव्याजेन तमेव अनुसृत्य अवदत् । (प्रतिज्ञासमनन्तरं रामः धनुष्टङ्कारं चकार)

# आश्रुतः श्रुतवृत्तेन तेन सुन्दप्रियावधः ।
# तमेवान्ववदत्तस्य चापः शिञ्जारवच्छलात् ॥ ४० ॥

- आश्रुतः – आ+ “श्रु श्रवणे” + क्त
- श्रुतवृत्तेन – श्रुतं वृत्तं येन सः, तेन
- सुन्दप्रियावधः – सुन्दस्य प्रिया, सुन्दप्रियायाः वधः
- शिञ्जारवच्छलात् – शिञ्जायाः रवः, शिञ्जारवस्य छलम्, तस्मात् । “मौर्वी ज्या शिञ्जिनी गुणः” (अमरः) | शिञ्जारव + छलम् = शिञ्जारवच्छलम् । तुगागमसन्धिः ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

# सङ्क्षेपः

- ताटकावृत्तान्तः
- रामस्य स्त्रीवधशङ्का
- दृष्टान्तप्रदर्शनेन शङ्कानिवारणम्
- रामेण ताटकावधस्य प्रतिज्ञा






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in